735

वाणीं भजत




# मासिकी पत्रिका



संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम् .

संपुटः १०  क्रमांकः १

15 JANUARY 1972

विरोधिकृत् पुष्यांकः  शकाब्दाः १८९३  मूल्यम् ४० पैसाः

# विषयसूचिका








# बंगालप्रादुर्भावः

अहो महादुरन्तता निहीनकष्टचेष्टता
प्रजानिहिंसनक्रियाप्रगाढमूढकुक्रिया,
स्वजातिभक्षणादृतिप्रसिद्धमीनभावना
ऽसमाऽतिदुष्टपाकनायकाग्रयायिनाम् ॥

गृहान् कुटीः पुराणि च प्रशान्तपल्लिकास्तथा
पशून् शिशून् नरान् वधूः प्रदह्य भस्म चाकरोत्,
धनानि धान्यसन्ततीस्तथा पदार्थजालकं
विलुंठ्य पाकपातकी व्यधावयत् प्रजाः बहिः ॥

प्रजादरप्रचोदिता वृताश्च ताभिरेकशः
प्रमारिताः प्रधाविताः विदूरबन्धपातिताः,
प्रभूतयातनाशतैः प्रपीडिताः निरन्तरम्
पराक्रमैः पराक्रमं व्यमोचयन् किल प्रजाः ॥



# सम्पादकीयम्

## धर्मो रक्षति रक्षितः

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ।।

दुष्टं दूरेण वर्जयेदिति न्यायेन स्वातंत्र्यसमरावसाने मुसलमानानां कृते अभीष्टं भूखण्डं दत्वा अवशिष्टमेव शिष्टं भारतमरक्षन् भारतनायकाः पूर्वम् । अंगव्राते दुष्टांगखंडने एव खलु शिष्टांगानां संरक्षणं सेत्स्यति ? तथापि ते अत्याशापरवशाः अस्मदीयं काश्मीरं आक्रमितुमारभन्त, तेलंगाणाप्रदेशे च भारतगर्भे रजाकरादिदुष्टवृन्दमूलं दुराक्रमणमारभन्त । स्वर्गत - पटेलमहाभागस्य साहसेन तेल्लंगाणे संरक्षितेऽपि काश्मीरे पराक्रान्तभूभागः पराधीन एवातिष्टत् अग्रराज्यानां कुटिलनीत्या । तत्प्रभृति आसिन्धु आवंगालदेशं भारतोत्तमांगं भूभागमाक्रमितुमेव उद्युक्ताः पाकाः प्रतिक्षणं उपद्रवमुत्पादयन्तः कच्छभूमिमकवलयन् । तटस्थभारतपरिबाधनाय दीक्षिताः अग्रराज्यपालाः पाकशिखंडिनमालंब्य भारतयोगक्षेमध्वंसं निरन्तरमारचयन् ।

दैवविधिरलंघ्या, विनाशकाले विपरीतबुद्धिः । अस्मद् व्योमयानापहरणगाथया प्रवृत्ते वैमनस्ये प्राक्पश्चिमपाकस्थानयोः विमानमार्गे भारतेन प्रतिबद्धे, पाकस्थानप्रथमनिर्वाचने एव प्रथमचुंबने दन्तभंगवत् अवामीलीगपक्षस्य आधिक्यप्राप्तौ च पाकाध्यक्षमतिर्विचलिता । बंगलाप्रतिनिधिमुख्यं अब्दुलरहमानं स प्रबध्य बंगालादेशदमनाय प्रारभत । लक्षशः विनाशिताः तत्रत्याः

प्रजा:, कोटिशश्च भारतं प्रद्राविताश्च । बांग्लादेशस्य भारतस्य च आर्तनादः अग्रराज्यानां श्रवणेषु बधिरशंखारावत्समजनि । बंग्लादेशप्रजा एव मुक्तिवाहिनीरूपेण संघटिता: पाकसैनिकान् प्रत्ययुध्यन् । एवं सप्ताष्टमासेषु अतीतेष्वपि सुरक्षापरिषदादिष्वपि अन्धता बधिरता एडमूकतैवान्वभूयत । अन्ते पाकपातकी भारतभूभागमपि आसिन्धु आबंगालं अक्रामितुं सेनाव्यूहं आरचयत् ।

अस्मेरिका च तत्सहायत्वेन मारणायुधानि भूरिशोऽर्पयत् । अन्त: कान्दिशीकरक्षणे, बहि: शत्रुभीत्या च भारतदेश: उद्विग्न: बहुवारं एतस्या: परिस्थिते: चिकित्सायै प्रतिराज्यं विज्ञापयामास । परन्तु एवं क्षान्तिश्च भारतस्य दौर्बल्यं भावयित्वा पाक: युद्धमेव प्रारभत पश्चिमभागे । अवश: भारतदेशश्च पश्चिमभागे आत्मसीमारक्षणमात्रपरायण: पूर्वभागे मुक्तिवाहिन्या: सहायचर्यां सुदृढं आरचयत् येन द्विसप्ताहान्तर एव बांग्लादेश: विमोचित: शत्रुसैनिकाश्च पंचाशल्लक्षाधिका: शरणं गता: । पश्चिमप्रान्ते यद्यपि स्वल्प: भूभाग: पाकायत्त आसीत्तथापि सुविशाल: पाकप्रदेश: भारतायत्त आसीत् ।

अतीवेदं प्रशंसार्हं प्रपंचस्य यद् बांग्लादेशे पाकयोधशरणागत्यनन्तरमेव अस्मन्प्रधान्या एकपक्षनिर्णयत्वेन युद्धविरमणमाघोषितम् । अनेन अचिंतितेन आघोषणेन याह्योपि क्षीणक्षीण: तदन्ववदत् । अमेरिकीयसप्तमनौकादलं चैनासैन्यसंचालनं च व्यर्थे एव समजनिषाताम् ।

इदानीं भारतदेश: रष्याया सन्धि कृत्वा पाकं विगृह्य बांग्लादेशयानं निर्वर्त्य पश्चिमपाकस्तान - भागमास्थाय अमेरिकां द्वैधीभावे प्रपात्य अवितथनीतिमाश्रित्य प्रपंचे अप्रधृष्यो राराजते ।

भातु भारतदेशोयं बलवीर्यपराक्रमैः !



# आन्ध्रप्रदेशे संस्कृतविश्वविद्यालयस्थापनम्

श्रीगोरंट्ल वेंकन्ननाम्ना भूरिवदान्येन संस्कृतपोषण एव आत्मसम्पदं विनियुक्तवता कीर्तिशेषेण आन्ध्रप्रदेशे संस्कृतविश्वविद्यालयस्थापनार्थं लक्षशः स्वधनं आन्ध्रप्रदेशसर्वकारायत्त मारच्य शासनमारचितम् । आन्ध्रसर्वकाराज्ञया विश्वविद्यालयस्थापननिर्वहणादिव्यावहारविशेषान् परिज्ञातुं वारणासीयसंस्कृतविश्वविद्यालयं गतः अवगततत्रत्यव्यवहारविशेषश्च इदानींतन - आंध्रप्रदेशमुख्यमन्त्री श्री पी. वी. नरसिंहरावः संस्कृतांध्रांग्लहिन्दीउर्दूप्रभृतिबहुभाषानिष्णातः कविवरः आत्माधिकारसमय एव संस्कृतविश्वविद्यालयं स्थापयितुं (१९७२ जुलै मासादेव प्रारब्धुं) उत्सुकते । अधुना च तस्य विश्वविद्यालयस्य स्थापने स्थलस्य प्रश्नः प्रादुर्भवति । विजयनगरम् तिरुपतिरिति स्थलद्वयं श्रूयते । तत्रापि तिरुपतिनगरे तस्य सर्वविधं सौकर्यं आलक्ष्यते ।

१. महाक्षेत्रत्वात्प्रतिदिनं बहूनां पंडितानां आगमनं वर्तते ।

२. सकलभारतदेशवासिनां अत्र यातायातसंबन्धो वर्तते ।

३. केन्द्रीयसंस्कृतविद्यापीठः अत्र वर्तते ।

४. प्राच्यकलाशाला च शताधिकवर्षवयस्का वर्तते । तत्र च वेदागमशास्त्रेषु बी. ए. परीक्षाश्च निरुह्यन्ते ।

५. प्राच्यलिखित-पुस्तक-भाण्डागारश्च महान् विद्यते ।

६. इदं च स्थलं मद्रासप्रान्तपार्श्वे अस्ति यत्र स्थापितः विश्वविद्यालयः मद्रासप्रभुत्वेन पादेनविघटयमानं संस्कृतं सुभृशमुज्जीवयिष्यति च ।

७. स्थलं च देवस्थानीयं बहुलं सुखं लभ्येत ।

८. धनराशिश्च देवस्थानात् पर्याप्तं प्राप्येत ।

अतः संस्कृतविश्वविद्यालयः तिरुपतिनगरे एव स्थापनीयः इति आन्ध्रसर्वकारं अभ्यर्थयते इयं सभा ।

इति,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री, संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.)

# कन्हैया-अवतारः

लेखकः
श्री ल म. चक्रदेवः, B. A, (Hons) M. Sc., C. I. I. Sc, श्रीवत्सबालमन्दिरम्, बम्बई-४.



अत्यल्पवयोवद्भिः बालकैः प्रयोज्यानि रूपकाणि, तत्रापि महापुरुषचरितात्मकानि प्रतिभाषं आवश्यकानि, तत्रापि च संस्कृते अत्यावश्यकतमानि। संस्कृतसंपर्करहिताः ऊहमात्रविवशाः बहवः नवनवविषयसंकलनस्य अयोग्यं संस्कृतमिति भावयन्ति तथैव प्रचारयन्ति च। तादृशदुष्प्रचारसंशोधनसमर्थानि विरळानि पत्राणि प्रतिमासं प्रतिपक्षं प्रतिदिनं वा निर्गच्छन्ति। श्रीवत्सबालमन्दिरं च निदर्शनं शिशुत्वावस्थायामेव स्तन्येन सहैव संस्कृतसंभाषणाभ्यासः सुकर इत्यस्य।

इदं महत् प्रमोदस्थानं यत् संस्कृतप्रचारे संस्कृतिसंरक्षणे च बद्धदीक्षस्य विद्याभवननिर्वाहकस्य परस्सहस्रैः आत्मनिबन्धैः परेषामपि किमुत भारतीयानां मनांसि भारतीयतत्त्वेषु सुप्रवणानि कृतवतः देशदेशान्तरेषु भारतीयविद्याभवनशाखास्थापनद्वारा संस्कृतसंस्कृत्योः विषये दृढतरमूलशिलाः खातवतः आदर्शपुरुषस्य स्वर्गतस्य क. मा. मुन्शिमहोदयस्य अवतार इति रूपकं श्रीवत्सबालमन्दिरबालैः अभिनीतमिति।

नमो मुन्शी महाभाग नमस्संस्कृतरक्षक।
नुमस्त्वां त्वत्क्रियाशक्तिरक्षितामरगीरताः॥

—(संपादकः)

पात्राणि— कुमार - रमेशः, कुमार - उमेशः, तथा च कुमारी - मेधाविनी।

स्थानम् — राजमार्गः। प्रातः सार्ध-अष्ट-वादन-समयः।

प्रसंगः— उमेशः प्रातःकालीनम् गणितवर्गम् समाप्य स्वगृहम् राजमार्गेण गच्छति। सः अर्धपण्टम् धारयति, तस्य वेशभूषा सामान्या। तस्य हस्ते टिप्पण-पुस्तिका (Note-

Book), भूमिति-उपकरण-पेटिका च अस्ति। विरुद्ध-दिशा, रमेशः, उमेश– सम्मुखम् आगच्छति। सः तु सुस्नातः, नूतन-वस्त्राणि परिधाय "भवनम्" प्रति गन्तुम् सवेगम् चलति। अग्रे, रंगमंचोपरि साक्षाद् एव पश्यत।

उमेशः– अयि वयस्य रमेश, अद्य प्रातः एव, कुत्र गच्छसि? त्वम् तु, सार्ध-अष्टवादनात् पूर्वम् शय्याम् अपि न त्यजसि इति मे अनुभवः। किन्तु, अद्य, सार्ध-अष्ट-वादने एव, सुस्नातः, नूतन-वस्त्राणि परिधाय, सवेगम्, कुत्रापि गन्तुम् प्रस्थि-तोसि। कस्मात् इयम् त्वरा ?

रमेशः– अधुना एव, परदेशागत-विमानात् अवतीर्णोसि किम्? रे मूढ, न जानासि अद्यदिनस्य माहात्म्यम् ?

उमेशः– भो विद्वद्वर, न जाने इति एव पृच्छामि। किम् तत् महत्वम्, येन, कुम्भकर्णः त्वम्, प्रातः एव, शुचिर्भूत्वा, स्वगृहात् बहिः प्रस्थितोसि ?

रमेशः– शृणु तर्हि। अद्य डॉ. कन्हैयालाल मुन्शि महोदयानां जन्मदिनोत्सवः। तस्मात् "भारतीय विद्या भवने" एकः सुन्दरः कार्यक्रमः विरचितोस्ति। तत्रैव गच्छामि। त्वमपि आगच्छ मया साकम्।

उमेशः– ते एव मुन्शिमहोदयाः किम्, ये, प्रायः, दशमासेभ्यः पूर्वं दिवं गताः ?

रमेशः– ओम् ते एव।

उमेशः– किम्, ते एतावन्तः श्रेष्ठाः, यत्, तेषाम् जन्म-दिनोत्सवः तथा नियोजनीयः यथा, नोव्हेम्बर-मासस्य चतुर्दश-दिनांके चाचा-नेहरूमहोदयानाम् नियोजितः आसीत् ?

रमेशः– अवश्यम् एव। राजकीय-शासकीय-क्षेत्रे नेहरूणां यत् स्थानम् विद्यते, तदेव स्थानम्, साहित्यक - विद्यादानादि-

क्षेत्रेषु मुन्शीनाम् अस्ति, यतः, तैः, शतशः पुस्तकानि लिखितानि, भारतीय - विद्या - भवनम् च संस्थापितम् । भारते सर्वत्र प्रमुख-नगरेषु "भवनस्य" शाखाः निर्मिताः । परराष्ट्रेषु अपि भवन-शाखाः विद्यन्ते ।

उमेशः– मया कुत्रापि पठितम् स्मर्यते यत् इमे मुन्शिमहोदयाः सनातन, नाम, हिन्दु-धर्मस्य नितान्तम् अभिमानिनः आसन् । अपि सत्यम् इदम् ?

रमेशः– निःसंशयम् एव । एतदर्थम् मया एकम् प्रमाणम् दीयते, शृणु । अस्माभिः पठितम् एव, यत् "गझनी" इति मुस्लिम-देशस्य महम्मद् सुलतानेन गुजरात-स्थित-सोमनाथ-क्षेत्रम् लुंठितम्, देवालयं च विनाशितम् । स्वातंत्र्यसंपादनानन्तरं एकपंचाशत् तमे वर्षे, तस्मिन्नेव वास्तुनि एकम् अद्यतनम्, भव्यम्, विशालम् मंदिरम् निर्माय तत्र भगवतः सोमनाथ-ज्योतिर्लिंगस्य, पुनः प्राणप्रतिष्ठा कृता । अस्य ऐतिहासिकधर्मकार्यस्य, द्रष्टा, संयोजकः, प्रमुख -सूत्रधारश्च, कन्हैयालाल मुन्शिश्रीः एव ।

तस्मिन्नेव पवित्रे क्षेत्रे, तस्मिन्नेव शुभप्रसंगे अन्यद् एकं महत्वपूर्णम् कार्यम् तन्नाम, संस्कृत - विश्व - परिषदः निर्माणम् । अस्य श्रेयः तु सर्वथा मुन्शिश्रीणाम् एव ।

उमेशः– अतीव सुन्दरम् विवर्णितम् त्वया सर्वमिदम् । अरे रमेश' तत्र पश्य, अस्माकम् मेधाविनी अपि, कृत - बहुप्रसाधना, भवनम् गन्तुकामा दृश्यते । (मेधाविनीं प्रति, उच्चैः) अयि मेधाविनि, एहि, एहि अत्र ।

मेधाविनी– (समीपम् आगत्य, रमेशं प्रति) अरे रमेश, त्वमपि भवनम् गच्छसि किम् ?

रमेशः– अवश्यम् एव ।

मेधाविनी– (उमेशं दृष्टवा) अरे उमेश, त्वम्, टिप्पण-पुस्तिका-पाणिः, अर्धपण्टधारी, तव गणितवर्गम् समाप्य स्वगृहम् गच्छसि किम् ?

उमेशः– प्रथमम् मया तथैव इष्टम्, किन्तु अधुना, रमेश-वचनात्, अहमपि युवाभ्याम् सह, भवनम् एव आगच्छामि ।

मेधाविनी– उदारः कल्पः । मम एकः अधिकः श्रोता । यतः, अहम्, तत्र मुन्शिश्रीविषये एकम् लघु-भाषणम् करोमि ।

रमेशः– अतो हि । तव मातापितृभ्याम्, तव नाम "मेधाविनी" कृतमस्ति, तत् न वितथम् ।

उमेशः– अधुना तु, सर्वत्रैव स्त्री-साम्राज्यम् प्रचलति ।

मेधाविनी– यदि एवं परिहासम् कुरुतः भवन्तौ, तर्हि अस्माकम् मैत्री फूः । (गट्ठी-फू नाटयति, क्रुद्धा भूत्वा अपसरति च)

रमेशः– क्षमस्व परमेश्वरि, क्षमस्व ।

उमेशः–मा सुन्दरि कुरु कोपम् । मदुपरि कुरु अनुकम्पाम् ।

रमेशः–यदि इच्छसि, तर्हि पादयोः अपि पतामि । (लोटांगणं-साष्टांगनमस्कारम् नाटचति )

मेधाविनी– मा, मा, एवम् । प्रीतास्मि वत्सौ । वर्धताम् युवयोः विवेकः । (नेत्रे निमील्य द्वौ हस्तौ प्रसार्य आशीर्वाद-दानम् नाटयति)

रमेशः– यदि, देवी भगवती प्रसन्ना तर्हि एकं वरं देहि ।

मेधाविनी– अंगीकृतम्, वृणीष्व वरम् ।

रमेशः– तव भाषणम् अत्रैव स्वल्पम् श्रावय, इति एव मे वरः ।

मेधाविनी– सुयोग्य: वर: । तेन ममापि स्वल्प: लाभ: एव स्यात् । अवधीयताम् तर्हि, अर्थात् न सर्वम् भाषणम्, अपि तु मध्यत: मध्यत: एव ।

"भो अध्यक्ष-महोदया: सज्जनाश्च ।

१. मुन्शि-महोदया:, अस्माकम् प्रथम प्रधान - मन्त्रिणाम् जवाहरलाल नेहरुणाम्, परम-मित्रम् । स्वातंत्र्य-संपादनात्परम्, निजामस्य मुस्लिम - राज्यम् भारतस्य उदरे एव, कर्करोगवत्-आसीत् । विद्रोहकारि - रझाकाराणाम् सैन्यस्य नि:पातम् कृत्वा, तद् - राज्यस्य त्रिधा विभाजनम्, त्रिषु राज्येषु विलीनीकरणम् च मुन्शिश्रीभिरेव कारितम् । वयं सर्वेपि भारतीया:, एतदर्थम् तेषाम् ऋणिन: स्म: ।

२. तदनन्तरम्, केन्द्रीय-मन्त्रिमण्डले नेहरुभि: मुन्शीनाम् अन्नमंत्रिपदे नियुक्ति: कृता । प्रतिवर्षम् पर्जन्यकालस्य प्रारम्भे, अस्माभि:, भारते सर्वत्र, वनमहोत्सव: क्रियते ननु, तस्य अति-महत्त्वपूर्ण-कार्यस्य प्रवर्तका: मुन्शिश्री: एव । तस्मात्, प्रतिवर्षम् सहस्रश: नूतन-वृक्षा: आरोप्यन्ते !! अत एव ते वदन्ति स्म यत् तेषाम् पुत्रा: सहस्रश: सन्ति, यत: कविवचनम् अस्ति,

दश-कूप-समा वापी दश-वापी-समं सर: ।
सरो-दश-सम: पुत्र: दश-पुत्र-सम: तरु: ॥"

उमेश:– वा: वा । सुन्दरम् । अग्रे चल ।

मेधाविनी– ३. "अस्माकम् भारतस्य संविधान-निर्माणे, मुन्शीनाम् भूयिष्ठभाग: आसीत् । भाषा-समस्याया: निराकरणं कथं

करणीयम्, तत्, मुन्शिभिरेव संसूचितम्। संविधानस्य अंतिमम् वाचनम् तैरेव कृतम् येन हिन्दी भाषा केन्द्रशासनभाषापदे प्रस्थापिता"।

रमेशः– अयि, "राष्ट्रभाषापदे" इति वद।

मेधाविनी– न न, न राष्ट्रभाषापदे, अपि तु, केन्द्रशासनभाषा (Union official language) पदे, एव। अखिलेपि संविधाने "राष्ट्रभाषा" (National language) इति शब्दस्य उल्लेखोपि नास्ति।

उमेशः– किन्तु, प्रायः, सर्वे नेतारोपि संविधानानुसारम्, एव, हिन्दीं राष्ट्रभाषां वदन्ति।

मेधाविनी– तैः संविधानम् अपठित्वा एव, स्वयं स्वल्पमपि विचारम् अकृत्वा एव, तथा उच्यते।

रमेशः– त्वयि मेधाविन्यां न्यायाधीश-कन्यकायाम् दृढम् विश्वसिमः।

उमेशः– तव भाषणम् अग्रे चलतु।

मेधाविनी– धन्यवादाः।

४. "त्रिभाषासूत्रेण संस्कृतस्य मरणम् निश्चितम् एव इति यदा मुन्शिभिः प्रत्यक्षम् अनुभूतम् तदा तैः "संस्कृत-आयोगः" विरचनीयः इति संसूचितम्। नेहरुभिः तद् अंगीकृतम्। तेन आयोगेन बहु सुन्दरम् कार्यम् कृतमस्ति। अतः संस्कृतस्य नाम, यद् अधुना भारते स्वल्पांशेन तु, श्रूयते, तदर्थम् मुन्शिश्रीः एव धन्यवादान् अर्हन्ति।

५. संस्कृतस्य उद्धारार्थम् मुन्शिभिः भवनेषु सरल-संस्कृत-परीक्षा-केन्द्राणि तथा च, गीता-परीक्षा-केन्द्राणि स्थापितानि, यत्र सद्यः सहस्त्रशः विद्यार्थिनः पठंति ।

६. संस्कृतार्थम् एव मुन्शिभिः सोमनाथक्षेत्रे एक पंचाशत्तमे वर्षे "संस्कृत-विश्व-परिषद्" संस्थापिता । षट् षष्टि-वर्ष-पर्यन्तम्, पंचदश - वर्षेषु परिषदः अष्ट - अधिवेशनानि जातानि, यानि सर्वाणि अपि, महत्त्वपूर्णानि । परम्, महा-दुःखस्य विषयः अयम्, यत्, गत - सार्धपंचवर्षेषु, अस्याः परिषदः एकम् अपि अधिवेशनम् नैव जातम् । कन्हैया-लालैः प्रारब्धानि सर्वाणि कार्याणि तेषाम् पश्चात्, तेषाम् पत्नी लीलावती देवी, सुन्दरतया चालयति । अस्मिन् महत्वपूर्णे विषये अपि तया अवधानम् देयम् इति संप्रार्थये"।

उमेशः– (स्वीयं मणिबंध-घटियन्त्रम् दृष्ट्वा) मेधु, अलम् अलम् तव भाषणेन । अधुना तु सपाद-नव-वादन-वेला जाता । कार्यक्रमः सार्ध-नव-वादने एव प्रारभते, अतः अस्माभिः त्वरया एव, भवनम् गन्तव्यम् स्यात् । रमेश, धाव ।

(त्रयोऽपि त्वरया निर्गच्छन्ति)



# वन्दे संस्कृतमातरम्

ले० वैद्य श्री रामस्वरूपशास्त्री, संपादकः, बालसंस्कृतम, बम्बई–६.

पठामि संस्कृतं नित्यं लिखामि संस्कृतं सदा ।
वदामि संस्कृतं नित्यं वन्दे तंस्कृतमातरम् ॥ ॥ १ ॥

श्रणोमि संस्कृतं नित्यं ध्यापामि संस्कृतं सदा ।
जानामि संस्कृतं सम्यक् वन्दे संस्कृतमातरम् ॥ ॥ २ ॥

संस्कृतस्य कृते जीवन् संस्कृतस्य कृते यजन् ।
संस्कृतस्य सदा भक्तो वन्दे संस्कृतमातरम् ॥ ॥ ३ ॥

संस्कृतस्य प्रतिष्ठायां नैजं सर्वं ददाम्यहम् ।
संस्कृतस्य प्रसादाय वन्दे संस्कृतमातरम् ॥ ॥ ४ ॥

संस्कृतस्य प्रचाराय सर्वत्र प्रसराय च ।
आत्मानमाहुतं मन्ये वन्दे संस्कृतमातरम् ॥ ॥ ५ ॥



# भाषाकुमारीणां विवादपरिहारः

ले० पं· पडाल ब्रह्मरेड्डि, कोङ्कुदुरु.

(पूर्वानुबन्धः)

भगवती वाणी– सूक्ष्मातिसूक्ष्मभावाभिव्यक्तीकरणे विश्वेऽस्मिन् न काचिद्भाषा संस्कृतस्य तुलनां कर्तुमर्हति ऋते चीनी-भाषायाः । यथा संस्कृते सूक्ष्मातिसूक्ष्मभावोऽपि सुस्पष्टतया प्रकटीकर्तुं शक्तिः विद्यते हस्तसञ्चालनमङ्गविकृतिं विना, न तथा आंग्लादि यूरोपीय भाषासु, याः खलु आधुनिक-विकसितसभ्यभाषाः इति मन्यन्ते वर्तमान शिक्षितजन-ताभिः । त्वं ममोरि न कुष्यसि चेत्तदाऽहमेकं वचः सूच-यामि ।

आन्ध्रभाषाकुमारी– प्रकटीक्रियतां तथ्यं मन्मनःसन्तोषाय ।

भ. वाणी– आदौ, यदा तव साहित्यरचनायाः - महाभारतस्य निश्चय कृतः, तदा तव व्याकरणं कस्यां भाषायां रचितं नन्नयार्येण? संस्कृते । किमर्थम्? त्वयि सा शक्तिर्नासीदिति खलु । एको नन्नय्य एव न; प्रत्युत परवर्तिनः सर्वे पण्डिताः तथैव अकुर्वन् । अर्वाचीना त्वं नितान्तमतिप्राचीनां भार-तस्य सांस्कृतिकीं परम्परां संरक्षितुं प्रभवासि किम्? संस्कृतं हि नूनं स्वरूपत एव सकललोककल्याणसाधनक्षमायाः भार-तीयसंस्कृतेः शरीरमधिष्ठानं वा । भारतस्य का आचार-परम्परा, कीदृशी नीतिः, कीदृग् गौरवं, कीदृशं धर्ममित्यादि

विषयविवेचनसामग्री कुत उपलभ्यते ऋते संस्कृतात्? नात्र सन्देहलेशः यद् भारतीयसंस्कृतिसंरक्षिका तु देवभाषा एवेति ।

तमिलभाषाकुमारी– देवानां भाषा संस्कृतभाषा कथङ्कारमस्माकं मानवानां प्रशासकीयभाषा भवेत्?

भ. वाणी– तस्याः सम्यगध्ययने कृते मानवेऽपि देवत्वसम्प्राप्तिर्भवति । अस्माकं भारतवर्षीयाणां गर्भाधानमारभ्य अन्त्येष्टिपर्यन्तं सर्वे संस्कारा एतद्भाषाद्वारैव सम्पाद्यन्ते । कुतः? संस्कृतस्य माहात्म्यं तादृगिति। साधारणशिलामयादिमूर्तिषु देवत्वसम्पादनयोग्यता एतस्यामेव भाषायां न भाषान्तरे । "अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः । देवत्वं प्रतिपाद्यन्ते मनुष्या यदनुग्रहात् । सरस्वतीं च तां नौमि वागधिष्ठातृदेवताम्" इत्यादीन्यत्र प्रमाणानि । नैतत् सामर्थ्यं भाषान्तरे केनापि स्वीकृतम् । यत्रानिष्टसम्भावना जायते, तत्र देवभाषानिर्मितगद्यपद्यात्मकग्रन्थपाठतोऽतिशीघ्रं सर्वोपद्रवः शाम्यति । अनन्तरं तत्रैव मङ्गलानि च समुत्पद्यन्ते ।

हिन्दीभाषाकुमारी– उत्तरभारतीयानां मातृभाषा, बहुजनज्ञाता, दाक्षिणात्यानामपि पठने सुखसाध्या चाहं कथं राजभाषा भवितुं नार्हामि? यदा आंग्लभाषा भारतीयानामध्ययने कठिनेति तस्याः निष्कासनस्यैकं कारणं वर्तते, तदा कठिना संस्कृतभाषा कथमाश्रयणीया भवेत्?

भ. वाणी– हिन्दीभाषाकुमारि, त्वमुत्तरभारतवर्षीयाणां मातृभाषा दाक्षिणात्यानामपरिचितेति खलु तव प्रशासकीयभाषाऽयोग्यत्वम् ।

तमिल– कस्याञ्चिद्भाषायां यथा मातृभाषिणः अधिकारो विद्यते न तथा तदभाषिणाम्। अतः समस्तोच्चप्रशासकीयसेवकवृत्तयः हिन्दी मातृभाषिणः प्राप्नुयुः, न दाक्षिणात्या इति खलु दक्षिणवासिना मस्माकमुक्तिः विरोधश्च। दाक्षिणात्यैरेव कुतः उत्तरवासिनां मातृभाषायाः अध्ययने परिश्रमो विधेयः?

भ. वाणी– समस्तभारतीयभाषाणां जीवनदायिनी एषा भाषा न कस्यचिद्देशविशेषस्य भाषा। विभिन्नप्रान्तेषु, सर्वत्र समानरूपेण प्रचरति। विभिन्नप्रान्तीयभाषाणां सम्यगध्यमनार्थं पोषणार्थञ्चापि देववाणी एवास्माकं शरणम्। संस्कृतमेवाद्यत्वे दिग्देशजनजातिविभेदापनोदकं समन्तादेकतासंवर्धकञ्च भवेत्। संस्कृतमांग्लभाषावत् पठने कठिनेति यदुच्यते, तन्मिथ्येति वक्तुं न शक्नोमि। तथापि रसपूर्णसाहित्या, सुसूत्रग्रथितव्याकरणा च संस्कृतभाषा काठिन्यस्यानुभवं नोत्पादयति।

सर्वाः भाषाकुमार्यः– तर्हि भगवती सूचयति यत्संस्कृतमेव भारतस्य कल्याणकारिणी प्रशासकीयभाषेति।

भ. वाणी– न केवलं सूचना, अपितु भविष्यत्कल्याणकामनापि। आगच्छत। वयं संस्कृतकान्तायाः दर्शनं कृत्वा ज्ञास्यामः यत्सा किं वदति वा।

सर्वाः भाषाकुमार्यः– बाढम्, यदाज्ञापयति भगवती।

(पटाक्षेपः)

इति वाणीकृतसंस्कृतप्रशस्तिर्नाम तृतीयं दृश्यम्।



अथ चतुर्थं दृश्यम् ।

(नेपथ्ये गानं श्रूयते)

मातर्वितरसि बोधमपारम् ।

यदि हितमिच्छसि पिब मधुरसमिह स्तन्यं देवगिरस्त्वम् ।
नान्या सरणिर्जीवनधरणे तव सुखसहितमुदारम् ।।

मातर्वितरसि बोधमपारम् ।।

देशभाषा तु भूषावदेकाङ्गस्य विभूषणी ।
गीर्वाणभाषा वासोवत्सर्वाङ्गाणां विभूषणी ।।

संस्कृतकान्ता– मत्प्रशस्तिपूर्णमिदं गानं केन गीयते? या पुरा बहुमता सती धर्मभाषा, साहित्यभाषा, बहुकालं लोकभाषा चाभां, साहमस्मिन् कलुषिते कलियुगकाले पुनः कथं स्मर्ये। (ततः भगवती वाणी प्रविशति भाषाकुमारीभिः साकम्) (दूरतः दृष्टिविक्षेपं कुर्वन्ती) अहो! अद्य कुतः भगवती वाणी मत्सन्निकर्षमागच्छति ।

सं. कान्ता– भगवतीं वाणीं सादरमभिवादये ।

भ. वाणी– संस्कृतकान्ते, संवर्धताम्, संवर्धताम् ।

सर्वभाषाकुमार्यः– जननीं वन्दामहे शतवारम् ।

सं. कान्ताः– (सहर्षम्) शुभमस्तु वः ।

सर्वाभाषाकुमार्यः– मातः, भवत्यै किञ्चिद्विज्ञाप्यमस्ति । अत्र भवत्यां प्रशासकीयभाषातया कृतायां भारतस्य कल्याणं कीदृग् भवेदिति स्पष्टीक्रियताम् ।

सं. कान्ता–आत्मनः प्रशस्ति स्वमुखेनैव कथनमनुचितं भवेत् । सा भविष्यत्कल्पना स्वयमेव अहोस्वित् प्रजाभिरूह्या ।

(अनुवर्तते)

# पदार्थविज्ञानसारः

[पूर्वानुबन्धः]

शिष्यः– पक्वं फलं केन रूपेण ज्ञायते?

गुरुः– फलस्य वर्णविशेषेण तद्वृंतस्य म्लानभावेन एवमीषत्स्पर्शवशाद्वृक्षात्पतनेन च फलस्य पक्वतानिर्णीयते। इदानीं तवेच्छा यदि भवति तर्हि गच्छ। वयं पुष्पोद्याने व्रजामः। पश्योद्यानं कीदृग्रमणीयदर्शनं, तथा कीदृग्वा परमाश्चर्यं विविधरक्तपीतादिवर्णं! एवं नयनयोः कीदृगाह्लादजनकं च घ्राणेंद्रियस्य कीदृशं वा तृप्तिजनकं!

शिष्यः– अहमेतत्प्रष्टुमिच्छामि। पुष्पाणां के वाऽवयवा विवेचनीया भवन्ति?

गुरुः– पुष्पीयाः सप्तावयवा विवेचवार्हा भवन्ति। ते च प्रसवबन्धनदळकेसर-गर्भकेसर-बीजबीजकोशकोशाधारा इत्येवं सप्तावयवाः।

शिष्यः– सर्वेषां पुष्पाणां किं प्रसवबन्धनमस्ति?

गुरुः– सर्वेषां न हि। किं त्वनेकेषु पुष्पेषु प्रसवबन्धनमस्ति। विशेषतः कस्मिश्चित्पुष्पे बीजपाकपर्यंतं तत्तिष्ठति, कतिषु पुष्पेषु वा विकसनात्प्रागेव विघटच पतति। कतिषु पुष्पेषु च प्रसवबन्धनं न भवत्येव, यथा रजनीगंधादौ।

शिष्यः– किं तावद्दळमुच्यते ?

गुरुः– पुष्पावयवपत्रमेव दळं यत्समुदायमिळितं पुष्पमुच्यते ।

शिष्यः– कस्तावत् केसरोऽभिधीयते ?

गुरुः– दळानां मध्यप्रदेशे सर्वासु दिक्षु यत्सूत्राकाराणि वस्तूनि येषु च पुष्परेणवस्तिष्ठन्ति, त एव केसरा उच्यन्ते ।

शिष्यः– कस्तावद्गर्भकेसरोऽभिधीयते ?

गुरुः–पुष्पीयमूलावयवमारभ्य केसरमध्यप्रदेशे ये तिष्ठन्ति त एव गर्भकेसरा भवन्ति ।

शिष्यः– गर्भकेसरः किं सर्वेषां पुष्पाणां मध्यभागे तिष्ठति ?

गुरुः– प्रायः सर्वेषां पुष्पाणां मध्यभागे तिष्ठति । किं च कस्यचिद्वृक्षस्य कस्मिंश्चित्पुष्पे केसरस्तिष्ठति, कस्मिन्पुष्पे वा गर्भकेसरमात्रं तिष्ठति । एवं कदाचिद्वा एकस्मिन्वृक्षे केसरस्तिष्ठति । अन्यस्मिन् वृक्षे गर्भकेसरस्तिष्ठति । तद्रूपपुष्पेषु वायुयोगेन कीटपक्षिभ्यामपरेण वा अन्यस्मात्केसरादुड्डीयमानः परागो गर्भकेसरे लगति । न चेत् तस्मात्पुष्पात् फलोत्पत्तिर्नस्यादिति ।

शिष्यः– केसरगर्भकेसरविषयिणी काप्यन्या कथास्ति ?

गुरुः– केसरस्य द्वावंशौ मृणालीपरागाविति । एवं गर्भकेसरस्य त्रयो-भागाः । प्रथमश्चोर्ध्वभागो यस्तु मणिरित्यभिधीयते, द्वितीयो मणेरधो बीजकोशपर्यन्तं मृणाली, तृतीयस्तु बीजाधारमञ्जरी ।

शिष्यः– एभिः केन रूपेण बीजं जायते ?

गुरुः– यदा पुष्पं विकसितं भवति । तदा केसराणि स्फाटितानि भवन्ति । तेन च तत्परागो गर्भकेसरे पतति । तदनन्तरं तत्र बीजमुत्पद्यते ।

शिष्यः– कस्तावद्बीजकोशः कोशाधारश्चोच्यते ?

गुरुः– बीजानि यत्र तिष्ठन्ति, स हि बीजकोश उच्यते । पुष्पसंवलितबीजकोशो यत्र तिष्ठति, स एव कोशाधारो ज्ञातव्यः ।

शिष्यः– इदनींमहं प्रष्टुमिच्छामि । गुरो, पुष्पाणां के के गुणा विवेचनीयास्सन्ति ?

गुरुः– रुचिरतरवर्णैराकारविशेषैः सौरभैश्च पुष्पाणि ज्ञातव्यानि सन्ति । पुष्पं हि न केवलं भूषणार्थं किं च तन्मध्ये कैश्चित्पुष्पैः महत्प्रयोजनमस्ति । अपरश्चानेन परमाश्चर्यबोधो भवति, यतः श्यामवर्णवृक्षादेस्तादृशसौरभशालि पुष्पं जायते । एवं मलिनतरमूलादेतावद्विचित्रपुष्पाण्युद्भवन्ति ।

शिष्यः– पुष्पाणामामोदविषये भवान् किमपि कथयिष्यसि ?

गुरुः– पुष्पमध्ये बाष्पमयरसोस्ति । स हि क्षुद्ररन्ध्रजालाल् तत्पत्राच्च यन्निस्सरति तेनैव समुत्पन्नं सौरभं वयं जिघ्रामः ।

शिष्यः– हे महाशय, भवता पूर्वमुक्तं, न केवलं भूषणार्थं पुष्पं । परं त्वपरविषयेपि तत्प्रयोजनमस्तीति ?

गरुः– तत् सत्यं । यदास्माकं मनांसि समुत्कण्ठितानि सन्तप्तानि च भवन्ति, तदा पुष्पाणि मनांसि स्थिरयन्ति सन्तर्पयन्ति च । एवं पुष्पतः फलानि बीजानि चास्माभिर्लभ्यन्ते । विशेषतो मधुतैलविशेषमधूत्सृष्टनस्यरञ्जनौषधादयो लभ्यन्ते ।

शिष्यः– कतिपयपुष्पाणां गन्धोतिमन्दोस्ति ।

गुरुः– इदमनुमीयते, येषां पुष्पाणां गन्धोतिमन्दः तानि पुष्पाणि दुष्टं बाष्पमल्पयन्ति किं वा नाशयन्ति । एवं तानि पशु-

पतङ्गादीनां भक्ष्याणि भवन्ति, औषधीयगुणं च धारयन्ति। वयमद्यापि समग्रया बुद्ध्या नो ज्ञातुं प्रभावामः यद्वृक्षेभ्यः पुष्पेभ्यश्च कियत्प्रयोजनं भवतीति ।

शिष्यः– मन्येहं पुष्पविषयिणी नान्या कापि कथास्ति ?

गुरुः– तत्रैकाऽपरा कथास्ति । या च युष्माकं मनोयोगयोग्या भवति । तथा हि तैः पुष्पैरीश्वरस्य परं कौशलमनुग्रहं च वयं जानीमः । तथास्माकं जीवनविषये या दुरत्यया चिंता सा निष्प्रयोजकीभूत्वा । पश्य, क्षेत्रस्थानि कानुर इति प्रसिद्ध-पुष्पाणि कीदृग्वर्धन्ते । तानि वै नहि परिश्रमं कुर्वन्ति । न वा सूत्रं संसृजन्ति । तथापि कश्चिन्महाराजाधिराजो निज-समग्रपरमैश्वर्यैस्तत्तुल्यतां नो याति । अत एवाऽचिरतर-कालावस्थायिने पुष्पाय यदि परमेश्वरेणेदृशं भूषणं दत्तं तर्हि किमस्मभ्यं भक्ष्यं परिधेयं च तेन नो प्रदास्यते ।

शिष्यः– वृक्षः पुष्पं च केन रूपेण संरक्षणं वृद्धिं च प्राप्नोति ?

गुरुः– प्रत्येकवृक्षे बहुतराणि बीजानि जायन्ते । तैरपि कालेकाले तरवः संरक्षिता भवन्ति । कियन्ति बीजानि क्षुद्रतराणि प्रायो दृश्यानि ।

शिष्यः– बीजानि पुष्पाणां कस्मिन्प्रदेशे तिष्ठन्ति ?

गुरुः– कतिपयेषु वृक्षेषु पुष्पाग्रभागे बीजानि तिष्ठन्ति । कति-पयानां पुष्पाणां मध्यप्रदेशे, कतीनां च पत्रमध्ये पत्राधः प्रदेशे च बीजानि तिष्ठन्ति । कतीनां वा शिबीमध्ये त्वग्भि-र्विभक्तानि बीजानि तिष्ठन्ति । केषां चित्समग्राणि बीजानि संभूयैकत्र तिष्ठन्ति, यथा सूर्यमुखीप्रभृतीनां । नैतन्महदा-श्चर्यं, यत् क्षुद्रतराद्बीजान्महान्वृक्षो जायते ।

(अनुवर्तते)

# श्रीपारिजातापहरणकाव्यम्

ले० श्री न· च· वेंकटताताचार्यः, विशाखपट्टणम्.

(पूर्वानुबन्धः)

क्रीडाशैलविहारसंभृतपरीरंभादिसंभावनाः
प्रेम्णा पोषितमाधवीवकुळयोरुद्वाहसंरंभणाः ।
चातुर्यातिशयेन निर्जितपणादाने कृताः प्रग्रहाः
इत्यादीन् सहसा विदर्भतनया मायावशात् व्यस्मरत् ॥

अनल्पहार्दाद् विहरन् सदैव
मनोरथानां उपयोगयुक्त्या ।
अतीव संसक्तमनाः प्रियोऽयम्
एवं न कर्तुं कथमुत्सहेत ॥

भर्ताऽस्ति बन्धुः किल प्राणतुल्यः
दैवं प्रधानं स हि तारकश्च ।
नारीप्रपञ्चस्य न तत्र शङ्का
का वा गतिस्स्यात् दयितेऽन्यमार्गे ॥

दत्वा धनं तत् पुनराददीत
सह्यं भवेत् चेतसि बाढमेतत् ।
दत्तं हि हार्दं पुनराप्तुकामे
नाथे कथं स्यात् अबलाजनस्य ॥

इत्थं विचिन्त्य प्रमदा तदानीं
कोपालयं क्रोधवशात् जगाम ।
नागाङ्गना चन्दनकोटरांतः
यथा समायाति तथैव सत्या ॥

धृत्वाऽतिमात्रमलिनाम्बरमाशु कान्ता
बद्ध्वा च मूर्धनि दृढं तनुवस्त्रखण्डम् ।
कस्तूरिकातिलकमास्यतले निधाय
ध्वान्तप्रपूर्णसदने शयितास्त मञ्चे ॥

तस्याश्च चित्ते समभूत् विमोहः
दुःखेन गात्रं बहुधा चकम्पे ।
तीव्रो बभूवात्मनि दैन्यभावः
रिरंसुनागस्य विषेण तुल्यः ॥

नेत्रे निमीलति विलोकयति प्रकामं
शीर्षं च कम्पयति हासमधो करोति ।
प्राप्नोति संभ्रममतीव सतीमतल्ली
पुष्पास्त्रबाणचयपीडितगात्रयष्टिः ॥

एवं किलासीत् वनितामणिस्सा
रोषातिरेकेण भृशं सुतप्ता ।
तस्माद् विहायान्यगृहार्थकृत्यम्
जोषं बभूवाथ मुरारिरत्र ॥

मौनीन्द्रदत्तसुमवृत्तमसौ हि चेटी
सत्यावधूसविधमेत्य वदेदवश्यम् ।
एवं विचिन्त्य हरिरत्र सुतं निधाय
सात्राजितीसदनमाशु ययौ सशङ्कः ॥

गत्वा मुरारिरवतीर्य रथाच्च तूर्णं
सूतं च दारुकमसौ विनियुज्य तत्र ।
स्थातुं ययौ सपदि नीरवसद्म तस्याः
कक्ष्यान्तराणि समतिक्रममाण एव ॥

चेटीजनो न खलु वाचयति प्रकामं
केलीशुकादिकमतीव मुदा मयूरम् ।
तालै र्न नर्तयति गायति वा न गीतम्
पूर्वं यथा न खलु दृश्यत एव सद्म ॥

किं कारणं कान्तिविहीनतायाः
सात्राजितीसुन्दरमन्दिरस्य ।
के नाम तस्यै विनिवेदयेयुः
इत्येव चित्ते हरिरन्वमंस्त ॥

विशङ्कमानस्सहसा विवेश
सात्राजितीकोपगृहं मुरारिः ।
वस्त्रावृतां तां च विलोक्य तन्वीं
सन्तर्ज्य चेटीः शनकैरुपेतः ॥

सूर्यातपक्लिन्नमृणालतुल्याम्
कान्तां विलोक्याशु शुचं स लेभे ।
चेटीकरस्थं व्यजनं गृहीत्वा
संवीजयामास शनैर्मुरारिः ॥

तदा प्रवृत्ते कुसुमस्य गन्धे
उत्थाय सत्या स्वपतिं ददर्श ।
करे गृहीतव्यजनं विलोक्य
बभूव बाष्पाम्बुनिरुद्धदृष्टिः ॥

पुनः पटेन स्वमुखं निगूह्य
रुरोदबाष्पाम्बुविधौतगण्डा ।
मरन्दबिन्दून्लवलीदलस्थान्
सर्वात्मना चानुचकार बाष्पम् ॥

क्षमा विहीनोत्तमराजपुत्र्याः
हृदि स्थितं स्वप्रियसखं नुदन् सः ।
सुहृद्वरो वायुरिवाजगाम
निश्वासलेशो ललनामतल्ल्याः ॥

कान्ताकुचद्वयविनिर्मितपत्रभङ्गः
संजातधर्मजलपूरविलुप्यमानः ।
सम्मानभूतसितमञ्जुलचीनवस्त्रं
संपावयन् स्थित इवात्र भृशं रराज ॥

एवं स्थितां मानवतीं स्वकान्तां
मानेन रोषेण च तप्यमानाम् ।
दृष्ट्वा मुरारिर्नितरां शुशोच
प्रेम्णा च कान्तां पुनराबभाषे ॥

कुतः प्रिये! त्वं न बिभर्ति भूषाः
कुतो नु धत्से सितवस्त्रमेतत् ।
कुतो नु वीटीरुचिरेव नास्ति
वक्त्रे त्वदीये वद मेऽस्य हेतुम् ॥

विशोधितुं मे हृदयं प्रवृत्ता
न चेत् परीहासविधौ प्रयत्नः ।
किमस्ति दोषो मयि सुन्दराङ्गि!
किमस्म्यहं ते रिपुरद्य कान्ते ॥

कुतो मृदूक्त्या नु न भाषसेऽद्य
न वीक्षसे मां त्रपयाङ्किताक्षम् ।
कुतः परिष्वक्तुमना न यासि
कृतोपराधस्त्वयि कैरिदानीम् ॥

(अनुवर्तते)

# नादब्रह्ममुपास्महे

लेखक: श्री ति. गो. अनन्तसुब्रह्मण्यम् .



भारतदेशे कर्णाटकसंगीतस्य माहात्म्यज्ञाः विरलाः । कर्णाटकसंगीतलक्षणग्रन्थाः बहवः विद्यन्ते । तेषां ग्रन्थानां लक्ष्यरूपेण कृतयः पूर्वस्मिन् काले नाजनिषुः । बहोः कालादनन्तरम् लक्षणग्रन्थस्य लक्ष्यरूपकृतयः अष्टादशशताब्दे आविर्भूतैः श्री त्यागराजस्वामिभिः रचिताः । त्यागराजस्वामिनः कर्णाटकसंगीतस्य, भगवद्भक्तेश्च आदर्शभूता अभूवन् । तेषां कृतिषु भावरागतालैः सह भगवद्भक्तिरपि दृश्यते । त्यागराजस्वामी श्री वाल्मीकेरपरावतार

इति प्रथा अपि प्रस्तूयते । ते २४,००० कृतीः रचितवन्त इति च श्रूयते । ते सकलवेदशास्त्रागममन्त्रतन्त्र-ग्रन्थानां विषयान् स्वकीर्तनेषु प्रतिपादयन्ति । अष्टादशवयस्येव स्वामिनः श्रीरामतारकमन्त्रोपदेशं स्वीकृत्य प्रतिदिनं १,२५,००० वारं जप्त्वा विंशतिवर्षेषु ९६ कोटि संख्यां प्रपूर्य श्रीरामदर्शनं लेभिरे । अथ रामैकपराणि कीर्तनानि चक्रुः । अपि च इतरदेवतां विषयेपि कीर्तनानि अरचयन् । स्वकीर्तनेषु संगीतशास्त्रार्थगूढविषयान् अन्तः कृत्वा रचितवन्तः ।

एकदा नारदमुनिः परिव्राजकरूपेणागत्य तेभ्यः "स्वरार्णव" नामकं संगीतलक्षणग्रन्थं दत्तवान् । प्रायशः स्वामिभिः तेलुगुभाषायामेव बहूनि कीर्तनानि दृष्टानि । तथापि संस्कृतभाषायामपि कति च न कृतीः अकीर्तयन् । कानिचन कीर्तनानि तेलुगुसंस्कृतपदघटितानि मणिप्रवालरीत्या विलसन्ति । कीर्तनेषु स्वानुभवं विनिवेश्य तत्र तत्र कल्पितवान् । कृतिषु लोकोक्तयः, उपमादयः अलंकाराः, भागवत - रामायणादीतिहास - पुराणकथाः तत्र तत्र समीचीनतया उपनिबद्धास्सन्ति । ते जन्मान्तपर्यन्तं रामपूजने, भजने स्वकालं नीतवन्तः । प्रतिदिनं उञ्छवृत्तिरूपेण कालं अयापयन् । प्रतिदिनं नित्योत्सवरूपेण प्रबोधोत्सवादि डोलोत्सवपर्यन्तं रामभजनं अकुर्वन् । स्वजीवनकाले नानारूपसांसारिकबाधाभिः पीडिता अपि ता अविगणय्य रामे भक्तिभरितं स्वमनः निश्चलीकृत्य कालं यापयन्ति स्म । नादोपासनेनैव भगवन्तं प्राप्तुं शक्यं इत्येतत् एतेषां सिद्धान्तः । स्वामिनां सर्वाः कृतयः "त्यागोपनिषत्" इति नाम्ना सर्वैः व्यपदिश्यन्ते ।

१. भगवन्नामकीर्तनमेव मोक्षोपभोगस्य कारणम् ।

२. ज्ञानं, वैराग्यं द्वयमपि भक्तेरसाधारणनिदानम् ।

३. भगवच्चरणारविन्दभजनमेव कलौ युगे अनुसरणीयं वर्त्म ।

४. शुद्धचैतन्यस्वरूपिणं भगवन्तं प्राप्तुं नादोपासनमेव उन्नतं वर्त्म इत्यादि एतेषां मतम् ।

कीर्तनानि सरसपदघटितानि, भक्तिगम्यानि स्वररागताल-निबिडितानि च सन्ति । स्वामिभिः क्षेत्राटनसमये तत्तत्क्षेत्रस्थ-मूर्तयः अकीर्त्यन्त ।

किञ्च कुलकरूपेण कानिचन कीर्तनानि अकुर्वन् । तानि च

१. घनरागपञ्चकम् २. कोवूर्पञ्चरत्नम् ३. श्रीपुरी-श्वरपञ्चरत्नम् इत्यादि रूपाणि ।

आध्रभागवतं, भद्राचलरामदासस्य वाग्विशेषाः, पुरन्दर-दासस्य साहित्यानुभवाः एतेषां कृतिषु द्रष्टुं शक्याः । नरस्तुत्या न किमपि प्रयोजनम्, भगवत्कीर्तनमेव जन्मसाफल्यदमिति तेषां आशयः । भक्तिकीर्तनानि विना "प्रह्लादभक्तविजयः", "नौका-चरित्रम्" इत्यादियक्षगानरूपखण्डकाव्यान्यपि एतैः गीतिरीत्या निर्मितानि । स्वामिनां कीर्तनानि संगीतशास्त्रलक्षणग्रन्थानां लक्ष्यरूपाणि । गायकानां वरप्रसादाः तेषां कृतयः । तेषां कीर्तनानि गात्वा अनेके विद्वांसः जीवनं यापयन्ति । कर्णाटकसंगीतशास्त्रस्या-विर्भावः त्यागराजस्वामिनां अवतारशताब्दीमारभ्य एव इति मुक्तकण्ठं वक्तुं शक्यम् । अधुना तेषां कीर्तनानि मार्कि सहस्राधि-कान्येव मुद्रितरूपेण लभ्यन्ते । ते. ६–१–१८४७ तमे संवत्सरे पुष्यबहुलपञ्चमीयुक्ते शुभे दिने श्रीरामपदं अभजन् । ते आपत्का-लसन्यासं स्वीकृत्य त्यागराजस्वामिनः इति नाम्ना प्रसिद्धा

अभूवन् । कलौ युगे समीपे एव श्रीरामदर्शनं कृतवन्तः महात्मानः एते एव । एते पञ्चनदक्षेत्रे (तिरुवैय्यारु) स्वकालं नीतवन्तः । एतेषां शिष्याः बहवः आसन्, तैरेव स्वामिनौ बहूनि कीर्तनानि गात्त्वा प्रकटीकृतानि । तथापि कानिचन अपूर्वाणि कीर्तनानि नाद्यापि बहिरागतानि । एतेषां निर्याणदिनं अद्यापि प्रतिवत्सरं पुष्यबहुलपञ्चम्यां पञ्चनदक्षेत्रे अतिविशेषेण संगीतविद्वद्भिः, गायकैः, इतरैश्च आराध्यते । यदि श्रीत्यागराजस्वामिनां कीर्तनानि न स्युः कर्णाटकसंगीतमपि न स्यात् ।

## अतृणे पतितो वह्नि रिति न्यायः

"अवरः"

तृणकाष्ठादिसंलग्न एव वह्निः ज्वलति । यत्र तृणकाष्ठादिकं नास्ति तत्र पतितो वह्निः ज्वलनाधाराभावात् स्वयमेव शाम्यति । तद्वत् उपजीवकाभावात् उपजीव्यस्य विनाशः इति न्यायसमन्वयः ।

ज्वलनसमर्थोऽपि वह्निः तृणरहिते स्थले यथा न ज्वलितुं शक्नोति; अपितु स्वयमेव शाम्यति तद्वन् तत्तत्कार्यकुशला अपि कार्यानुकूलसामग्रीविरहे सहायसम्पत्तेरभावे न कृतकृत्या भवितु मर्हन्ति ।

एवमेव जलान्निर्गतोमत्स्यः न जीवितुं प्रभवति । जलजान्यप्येवमेव जलान्निर्गतानि म्लानानि भवन्ति ।

जना अपि जीवनाधाराभावे अन्यत्र गच्छन्ति । एवं यत्र यत्र पोषकाभावेन पोष्यस्यविनाशः सम्भवति तत्र तत्र अतृणपतितवह्निन्यायः प्रसरति ।



# हा! विक्रमं ह्यणुविदं यम उज्जहार

ले० श्री या. वि. देवासकरः, वरपत्तनम्.



अणुविज्ञानविज्ञो हा! श्रीविक्रममहाशयः ।
श्रीअम्बालालपुत्रो हा! पुंगवो गगनं गतः ॥ ॥ १ ॥

पौषमासे सिते पक्षे, चतुर्दश्यां तिथौ तथा ।
नीतोऽकाले स कालेन, कालस्य गहना गतिः ॥ ॥ २ ॥

विज्ञस्य जन्मभूमिर्वै पुरी *कर्णावती किल ।
विधवाद्य हि जाता सा विद्वांसं विक्रमं विना ॥ ॥ ३ ॥

युवानं विक्रमं दृष्ट्वा स्वर्गतं रुरुदुर्जनाः ।
वैज्ञानिका विलेपुस्ते, हा! हा!! विक्रम, विक्रम ॥ ४ ॥

आसीन्मुख्याणुसंस्थायाः स समर्थो नियामकः ।
विक्रमः खल्वणुज्ञाने विक्रमं कृतवानहो ॥ ॥ ५ ॥

अहोरात्रं स विज्ञानं परमाणोः पपाठ च ।
तत्समः परमाणुज्ञो न भूतः, किं भविष्यति ॥ ॥ ६ ॥

कालं गमिष्यति, भविष्यति भारतोऽयम्
विज्ञानवान् विभववानणुकारकश्च ।
इत्थं विचिन्तयति सर्वजने सुयोग्यम्
हा! विक्रमं ह्यणुविदं यम उज्जहार ॥ ॥ ७ ॥

---



* कर्णावती = अहमदाबादः ।

# धूम्रसमस्या – निवारणोपायाश्च

[पूर्वानुबन्धः]

साधारणः अनुभवः अस्ति यद् सुमधुरं गीतं अस्मान् आल्हादयाति, कर्कशः मानुपकंठध्वनिरपि हृदयं निकृष्टं करोति। सिंहगर्जनाः, करिणां चीत्काराः एतैरपि मनुजः भीतभीतो भवति। किं पुनः एतैः यंत्रोत्पन्नैः ध्वनिभिः। एते अस्मान्सुखान्वितान् करिष्यंति कदाऽपि ? विज्ञानानुसारेण अपि मनुजस्य शब्दश्रवण-क्षमता मर्यादिता १६० डेसिबेल्समिता एव अस्ति। एते यंत्र-शब्दास्तु अतिक्रमन्ति मर्यादामेतां। एतत् केवलं इंधन - चालित-यंत्राणां विषये कथितं। सर्वविधयंत्राणां तु अगणनीयः ध्वनिः।

## परिहाराः

प्रथमः

### अधिक फलोत्पादनं

वनस्पतिजगतः धूम्रस्य परिवर्तनविषये क्षमतायां न्यूनता विविधकारणैः कृतेन भूरि वननाशेन संभूता अस्ति। यथा कथं चित् भूमेः सवृक्षीकरणेन तस्य प्रतिकारो न भवेत्। गतेषु ५० वर्षेषु जनसंख्या सर्वत्र एव वर्धमानाऽस्ति। तदर्थं सर्वेषु राष्ट्रेषु 'अधिकधान्योत्पादन'स्य आंदोलनानि प्रचलन्ति। तेन भूरिमात्रया वननाशः जातः। सस्यक्षेत्राणि केवलं ५–६ मासेषु हरितानि तिष्ठंति। एतानि हरित-पत्राण्येव कार्बनडायॉक्साईड वायोः शुद्धी-करणं कुर्वंति। इतरमासषट्के पुनस्सुविस्तीर्णो भूभागः वनस्पति-

रहितः इत्येव धूम्रशुद्धीकरण - संयंत्रैः रहितः तिष्ठति । अथ फलवृक्षास्तु ८–१० मासपर्यंतं हरितपत्रयुताः तिष्ठंति । ते केवलं अतिशीतकाले पर्णहीनाः भवन्ति । अतः फलोद्यानानां वृद्धिः एकः वायुशुद्धीकरणस्य प्रभावकारी उपायः भवेत् । फलानि च जनतायै अन्नपूर्तिं करिष्यंति ।

द्वितीयोपायः–

## द्रवीकरणयन्त्रैर्युत - इन्धनयन्त्राणि

प्रचलिते इंधन-चल-यन्त्रैः सह वायुद्रवीकरणसंयंत्राणां स्थापना-कर्तव्या । स्थावरैः इधन-यंत्रैः यावान् धूम्रः उत्पाद्यते सः सर्वोऽपि द्रवीकरणसंयन्त्रेण द्रवतां नीत्वा पुन विद्युच्छक्त्या विश्लेषितव्यः । कार्बनडायॉक्साईड सल्फरडायॉक्साईड का. मोनॉ एतेषां वायूनां द्रवीकरणं सुकरं अस्ति । इंधनयंत्रेण निर्मितशक्तेः कश्चिदल्पेनांशेन तत्सिद्धं भवेत् । अथ तत्र द्रवीकरणे वायुः संपीडितकोष्ठं नीत्वा साननलिम्खात् विमुच्यते । तस्य संपीडितवायोः निःसारेऽपि (जेट ऑफ कॉम्प्रेस्डस्मोक) शक्तिः वर्तते एव । अद्यपर्यंतं तस्याः शक्तेः उपयोगः न क्रियते, परन्तु यदि तस्याः उपयोगे न कश्चित् सानं टर्बाईन चक्रं चालयित्वा विद्युत् उत्पादिता भवेत् तर्हि संपी-डने व्ययीकृतायाः शक्तेः न्यूनतमं ४०% मिता शक्तिः पुनः उपलप्स्येत् ।

धूम्रे वायुभिः सह कश्चिदंशः जलबाष्पमपि वर्तते । द्रवीभूते सति जलं तथा विविधवायूनां पृथक्करणं कर्तव्यं । तत ऊर्ध्वं तेषां वैद्युत-विश्लेषणं कृत्वा प्राणवायोः पुनरुत्पादनं कर्तव्यं । द्रव-धूम्रस्य कश्चिद् भागः द्रवरूपेणैव नलिकोष्ठरेषु भरित्वा विविध - औद्यो-गिक कार्येषु उपयोगार्थे विक्रयं अर्हेत् । तथैव कस्यचिदंशस्य विश्ले-षणेन कार्बन तथा प्राणवायुः उत्पादितौ स्यातां । कार्बनकणाः

संपीडिताः विविधाकारैः विविधकार्येषु उपयोक्तुं सुशकाः । तथैव द्रवप्राणवायुः अपि विविध-औद्योगिकरासायनिककार्येषु आवश्यकः । सुप्रसिद्धाः एव अस्योपयोगाः । यदि अतिमात्रायां प्राणवायोरुत्पादनं भवेत्तर्हि तस्य तथावस्थायामेव वातावरणे विमोचनं कर्तव्यं । तेनापि वातावरणं शुद्धं एव भविष्यति । विशेषतः औद्योगिक-वसतिषु एतद् महत्त्वपूर्णं भविष्यति तत्रस्थ - जनानां स्वास्थ्य-दृष्टया ।

स्थावरैः इंधनगृहैर्निर्मितो धूम्रस्तु केनचिदेकेन बृहदाकारेण द्रवीकरण-विश्लेषण-संयंत्रेण परिवर्तितः भवेत् । परं चलयंत्राणां व्यवस्था कथं कर्तव्या ?

एते वायवः केवलं प्राण - उदजन - आदि - वायूनां तुलनया अल्पायासैः द्रवीभवन्ति । अतः प्रत्येकयाने इंधन - यंत्रेण सहैव सानाकाराणि धूम्र - द्रवीकरण - विश्लेषणादि - यंत्रसाधित्राण्यपि योक्तव्यानि । नैतद् कठिनं भवेत्, यंत्रोत्पादितशक्तेः केनचिद् अंशेन (संसज्य तु १०–२०% मितेन) यदि द्रवीकरणं संपत्स्येत् तर्हि का हानिः? वातावरणसंदूषणेन याः भीषणाः आपदः संभाव्याः तासां तुलनया एषः व्ययः अल्पः एव । पुनः धूम्रद्रवीकरणे उप-योक्तायाः ३०–४०% मिता शक्तिरेव पुनस्तस्य विश्लेषणे उप-युक्ता भवेत् । विद्युत्-रूपेण एतेषु चलयानेषु द्रवधूम्रस्य नलिकोष्ठ-रेषु भरणं न सुशकं भवेत् । अतः तस्य द्रवधूम्रस्य उपयोगः यंत्रस्य ताप-अपवहन-प्रणाल्यां कर्तव्यः । कश्चिद् भागः विश्लेष्य प्राणवायुः वातावरणे विमोक्तव्यः । ताप-अपवहनार्थे इंधनयंत्रस्य सर्वत एकः द्विभित्तिमयः भवति जलाशयः । केषुचिद् यंत्रेषु जलस्य स्थाने वायुरेव उपयुज्यते । परं बहुलांशं जलं एव उपयो-जितं दृश्यते ।

(अनुवर्तते)

# पाठकेषु विज्ञापनम्

गैर्वाणी नववर्षवयः अतीत्य अस्मिन् मासे दशमे वयसि पदं निदधाति। इयं चैकवर्षपर्यन्तं त्रैमासिकी स्थित्वा द्वितीयवत्सरात् मासिकी प्रकाश्यते। द्वित्रसन्दर्भान् विहायैषा मासक्रममनपहाय बहिरायातीति सुविदितं भवताम्। अद्यतनकाले संस्कृतपत्रप्रकाशनं कीदृशक्लेशबहुलमिति सर्वविदितम्। तत्रापि एतत्पत्रस्य क्लेशा विलक्षणा अनुभूयन्ते। तेषां कीर्तनेन नात्र किमपि प्रयोजनम्। रचनादौर्लभ्यं रसिकवैरल्यं चेति खेदयति चेतः निर्वाहकाणाम्। विषयवैविध्येन सारल्येन वैचित्र्येण नूतन-रचनाभ्यासप्रदर्शनेन च सुतरां प्रशंसितमिदं पत्रं आर्थिकदौर्बल्येन व्यथते। माकिं उपशतसंख्याका एव सदस्याः छंदं अर्पयन्ति, अवशिष्टा मूर्तयश्च निर्मूल्यमेव विभज्यन्ते वारं वारम्। केचन महानुभावाः विना याचनं प्रेषयन्ति स्वीयं छन्दं उचितकाले। परन्तु बहूनां न द्रवति हृदयं एकदापि। प्रेषव्ययबहुले काले, परिमित-परिवारवत्या अनया पत्रिकया प्रतिव्यक्ति विज्ञापनं असाध्यमिति हेतोः एवं विज्ञाप्यते यत् अनुपदं अथवा यावच्छीघ्रं, स्वीयं छन्दं (रू ४–००) प्रेषयित्वा पोषयन्त्विवति।

रूप्यचतुष्टयं यद्यपि भवतां उद्देशे अल्पमेव तथापि गैर्वाण्याः महते प्राणलाभाय संपद्येत। अन्यथा न केवलमिदं गैर्वाणी ह्रासमेष्यति, अपितु स्वाश्रयभूतां संस्कृतभाषाप्रचारिणीं सभामपि ह्रसयिष्यति।

अतः पुनर्निवेद्यते पाठका स्वस्वमनसा संचिन्त्य यथाशीघ्रं छंदं अर्पयितु तर्पयितुं च गैर्वाणीम्।

इति,

ति. कं. तिरुवेङ्कटाचार्यः,
प्रधानमन्त्री.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
R. N. 1845/60. Postal R. No. H. 493

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

## प्रहेलिके

नगरचरणशीला दंपतीवाहलीला
चरणयुगलयुक्ता भीकरारावघोषा ।
पतगपतिसुवेगा पक्षपाताद्विहीना
धनिकहृदयमोदं का तनोत्येव नित्यम् ?

(स्कूटर्)

—बालगणपतिभट्टः, श्रीरंगपट्टणम्.

आकाशे डयते सम्यक् पक्षहीनस्सपक्षवत् ।
सूत्रेण बद्ध्वाकृष्टोपि तथैव च स्वतंत्रगः ॥

(पतंगः)

—ति. गो. अनन्तसुब्रह्मण्यम्, तिरुपति.

Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500